अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो ऽअध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे-विशे ॥ ६ ॥

त्रीणि शता त्री सहस्राण्यग्निं त्रिꣳशच्च देवा नव चासपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्मा ऽआदिद्धोतारं न्यसादयन्त ॥ ७ ॥

मूर्धानं दिवो ऽअरतिं पृथिव्या वैश्वानरमृत ऽआ जातमग्निम् ।
कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ ८ ॥

अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र ऽआहुतः ॥ ९ ॥
विश्वेभिः सोम्यं मध्वग्न ऽइन्द्रेण वायुना । पिबा मित्रस्य धामभिः ॥ १० ॥

आ यदिषे नृपतिं तेज ऽआनट् शुचि रेतो निषिक्तं द्यौरभीके ।
अग्निः शर्धमनवद्यं युवानꣳ स्वाध्यं जनयत्सूदयच्च ॥ ११ ॥

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।
सं जास्पत्यꣳ सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महाꣳसि ॥ १२ ॥

त्वाꣳ हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने ।
इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः ॥ १३ ॥

त्वे ऽअग्ने स्वाहुत प्रियासः सन्तु सूरयः ।
यन्तारो ये मघवानो जनानामूर्वान्दयन्त गोनाम् ॥ १४ ॥

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।
आ सीदन्तु बर्हिषि मित्रो ऽअर्यमा प्रातर्यावाणो ऽअध्वरम् ॥ १५ ॥

विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषाणाम् ।
अग्निर्देवानामव ऽआवृणानः सुमृडीको भवतु जातवेदाः ॥ १६ ॥

महो ऽअग्नेः समिधानस्य शर्मण्यनागा मित्रे वरुणे स्वस्तये ।
श्रेष्ठे स्याम सवितुः सवीमनि तद्देवानामवो ऽअद्या वृणीमहे ॥ १७ ॥

आपश्चित्पिप्यु स्तर्यो न गावो नक्षन्नृतं जरितारस्त ऽइन्द्र ।
याहि वायुर्न नियुतो नो ऽअच्छा त्वꣳ हि धीभिर्दयसे वि वाजान् ॥ १८ ॥

गाव ऽ उपावतावतं मही यज्ञस्य रप्सुदा । उभा कर्णा हिरण्यया ॥ १९ ॥

यदद्य सूर ऽ उदितेऽनागा मित्रो ऽ अर्यमा । सुवाति सविता भगः ॥ २० ॥

आ सुते सिञ्चत श्रियꣳ रोदस्योरभिश्रियम् । रसा दधीत वृषभम् ।
तं प्रत्नथायं वेनः ॥ २१ ॥

आतिष्ठन्तं परि विश्वे ऽ अभूषञ्छ्रियो वसानश्चरति स्वरोचिः ।
महत्तद्वृष्णो ऽ असुरस्य नामा विश्वरूपो ऽ अमृतानि तस्थौ ॥ २२ ॥

प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे ।
इन्द्रस्य यस्य सुमखꣳ सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥ २३ ॥

बृहन्निदिध्म ऽ एषां भूरि शस्तं पृथुः स्वरुः । येषामिन्द्रो युवा सखा ॥ २४ ॥

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ२ऽ अभिष्टिरोजसा ॥ २५ ॥

इन्द्रो वृत्रमवृणोच्छर्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः ।
अहन्व्यꣳसमुशधग्वनेष्वाविर्धेना ऽ अकृणोद्राम्याणाम् ॥ २६ ॥

कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त ऽ इत्था ।
सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते ऽ अस्मे ।
महाँ२ऽ इन्द्रो य ऽ ओजसा कदा चन स्तरीरसि कदा चन प्रयुच्छसि ॥२७॥

आ तत्त ऽ इन्द्रायवः पनन्ताभि य ऽ ऊर्वं गोमन्तं तितृत्सान् ।
सकृत्स्वं ये पुरुपुत्रां महीꣳ सहस्रधारां बृहतीं दुदुक्षन् ॥ २८ ॥

इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत्त ऽ आनजे ।
तमुत्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्ननु ॥ २९ ॥

विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहुतम् ।
वातजूतो यो ऽ अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति ॥ ३० ॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ ३१ ॥

येना पावक चक्षसा भुरण्यन्तं जनाँ२ऽ अनु । त्वं वरुण पश्यसि ॥ ३२ ॥

दैव्यावध्वर्यू ऽ आ गतꣳ रथेन सूर्यत्वचा ।
मध्वा यज्ञꣳ समञ्जाथे ॥ तं प्रत्नथायं वेनश्चित्रं देवानाम् ॥ ३३ ॥

आ न॒ऽइडा॑भिर्वि॒दथे॑ सुश॒स्ति वि॒श्वान॑रः सवि॒ता दे॒वऽए॑तु ।
अपि॑ यथा॑ युवानो॒ मत्स॑था नो॒ विश्वं॒ जग॑दभिपि॒त्वे म॑नी॒षा ॥ ३४ ॥

यद॒द्य कच्च॑ वृत्रहन्नु॒दगा॑ऽअ॒भि सू॑र्य । सर्वं॒ तदि॑न्द्र ते॒ वशे॑ ॥ ३५ ॥

त॒रणि॑र्वि॒श्वद॑र्शतो ज्योति॒ष्कृद॑सि सूर्य । विश्व॒मा भा॑सि रोच॒नम् ॥ ३६ ॥

तत्सूर्य॑स्य दे॒व॒त्वं तन्म॑हि॒त्वं म॒ध्या कर्तो॒र्वित॑त॒ꣳ सं ज॑भार ।
य॒देदयु॑क्त ह॒रित॑ः स॒धस्था॒दाद्रात्री॒ वास॑स्तनुते सि॒मस्मै॑ ॥ ३७ ॥

तन्मि॒त्रस्य॒ वरु॑णस्याभि॒चक्षे॒ सूर्यो॑ रू॒पं कृ॑णुते॒ द्योरु॒पस्थे॑ ।
अ॒न॒न्तम॒न्यद्रु॒शद॑स्य॒ पाज॑ः कृ॒ष्णम॒न्यद्धरि॑त॒ः सं भ॑रन्ति ॥ ३८ ॥

बण्म॒हाँ २ऽअ॑सि सूर्य॒ बडा॑दित्य म॒हाँ २ऽअ॑सि ।
म॒हस्ते॑ स॒तो म॑हि॒मा प॑नस्यते॒ऽद्धा दे॑व म॒हाँ२ऽ अ॑सि ॥ ३९ ॥

बट् सू॑र्य॒ श्रव॑सा म॒हाँ२ऽ अ॑सि स॒त्रा दे॑व म॒हाँ२ऽ अ॑सि ।
म॒ह्ना दे॒वाना॑मसु॒र्य॑ः पु॒रोहि॑तो वि॒भु ज्योति॒रदा॑भ्यम् ॥ ४० ॥

श्राय॑न्तऽइव॒ सूर्यं॒ विश्वेदिन्द्र॑स्य भक्षत ।
वसू॑नि जा॒ते जन॑मान॒ऽओज॑सा॒ प्रति॑ भा॒गं न दी॑धिम ॥ ४१ ॥

अ॒द्या दे॑वा॒ऽउदि॑ता॒ सूर्य॑स्य॒ निरꣳह॑सः पिपृ॒ता निर॑व॒द्यात् ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒ः सिन्धु॑ः पृथि॒वीऽउ॒त द्यौः ॥ ४२ ॥

आ कृ॒ष्णेन॒ रज॑सा॒ वर्त॑मानो निवे॒शय॑न्न॒मृतं॒ मर्त्यं॑ च ।
हि॒र॒ण्यये॑न सवि॒ता रथे॒ना दे॒वो या॑ति॒ भुव॑नानि॒ पश्य॑न् ॥ ४३ ॥

प्र वा॑वृजे सुप्र॒या ब॒र्हिरे॑षा॒मा वि॒श्पती॑व॒ बीरि॑टऽइयाते ।
वि॒शाम॒क्तोरु॒षस॑ः पू॒र्वहू॑तौ वा॒युः पू॒षा स्व॒स्तये॑ नि॒युत्वा॑न् ॥ ४४ ॥

इ॒न्द्र॒वा॒यू बृह॒स्पतिं॑ मि॒त्राग्निं पू॒षणं॒ भग॑म् । आ॒दि॒त्यान्मारु॑तं ग॒णम् ॥ ४५ ॥

वरु॑णः प्रावि॒ता भु॑वन्मि॒त्रो विश्वा॑भिरू॒तिभि॑ः । कर॑तां नः सु॒राध॑सः ॥ ४६ ॥

अधि॑ न इन्द्रैषां॒ विष्णो॑ सजा॒त्या॒नाम् । इ॒ता मरु॑तो॒ऽअश्वि॑ना ॥ तं प्र॒त्नथा॒यं
वे॒नो ये दे॒वास॒ऽआ न॒ऽइडा॑भि॒र्विश्वे॑भिः सो॒म्यं मध्वो॒मास॑श्चर्षणीधृतः ॥ ४७ ॥

अग्न ऽ इन्द्र वरुण मित्र देवाः शर्धः प्र यन्त मारुतोत विष्णो ।
उभा नासत्या रुद्रो ऽ अध ग्नाः पूषा भगः सरस्वती जुषन्त ॥ ४८ ॥

इन्द्राग्नी मित्रावरुणादितिꣳ स्वः पृथिवीं द्यां मरुतः पर्वताँ२ऽ अपः ।
हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शꣳसꣳ सवितारमूतये ॥ ४९ ॥

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यः शꣳसते स्तुवते धायि पज्र ऽ इन्द्रज्येष्ठा ऽ अस्माँ२ऽ अवन्तु देवाः ॥ ५० ॥

अर्वाञ्चो ऽ अद्या भवता यजत्रा ऽ आ वो हार्दि भयमानो व्ययेयम् ।
त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥ ५१ ॥

विश्वे ऽ अद्य मरुतो विश्व ऽ ऊती विश्वे भवन्त्वग्नयः समिद्धाः ।
विश्वे नो देवा ऽ अवसा गमन्तु विश्वमस्तु द्रविणं वाजो ऽ अस्मे ॥ ५२ ॥

विश्वे देवाः शृणुतेमꣳ हवं मे ये ऽ अन्तरिक्षे य ऽ उप द्यवि ष्ठ ।
ये ऽ अग्निजिह्वा ऽ उत वा यजत्रा ऽ आसद्यास्मिन्बर्हिषि मादयध्वम् ॥ ५३ ॥

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वꣳ सुवसि भागमुत्तमम् ।
आदिद्दामानꣳ सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥ ५४ ॥

प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारꣳ रथप्राम् ।
द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥ ५५ ॥

इन्द्रवायू ऽ इमे सुता ऽ उप प्रयोभिरा गतम् । इन्दवो वामुशन्ति हि ॥ ५६ ॥

मित्रꣳ हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीꣳ साधन्ता ॥ ५७ ॥

दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः । आ यातꣳ रुद्रवर्त्तनी ॥ तं प्रत्नथायं वेनः ॥ ५८

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यꣳ सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥ ५९ ॥

नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुर ऽ एतारमग्नेः ।
एमेनमवृधन्नमृता ऽ अमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः ॥ ६० ॥

उग्रा विघनिना मृध ऽ इन्द्राग्नी हवामहे । ता नो मृडात ऽ ईदृशे ॥ ६१ ॥

उपा॑स्मै गायता नरः॒ पव॑माना॒येन्द॑वे। अ॒भि दे॒वाँ२ऽ इय॑क्षते ॥ ६२ ॥

ये त्वा॑हिह॒त्ये म॑घव॒न्नव॑र्ध॒न्ये शा॑म्ब॒रे ह॑रिवो॒ ये गवि॑ष्टौ।
ये त्वा॑ नू॒नम॑नु॒मद॑न्ति॒ विप्राः॒ पिबे॑न्द्र॒ सोम॒ꣳ सग॑णो म॒रुद्भिः॑ ॥ ६३ ॥

ज॒नि॒ष्ठाऽउ॒ग्रः सह॑से तु॒राय॑ म॒न्द्रऽओजि॑ष्ठो बहु॒लाभि॑मानः।
अव॑र्ध॒न्निन्द्रं॑ म॒रुत॑श्चि॒दत्र॑ मा॒ता यद्वी॒रं द॒धन॒द्धनि॑ष्ठा ॥ ६४ ॥

आ तू न॑ऽइन्द्र वृत्रहन्न॒स्माक॑म॒र्धमा ग॑हि। म॒हान्म॒हीभि॑रू॒तिभिः॑ ॥ ६५ ॥

त्वमि॑न्द्र॒ प्रतू॑र्त्तिष्व॒भि विश्वा॑ऽअसि॒ स्पृधः॑।
अ॒श॒स्ति॒हा ज॑नि॒ता वि॑श्व॒तूर॑सि॒ त्वं तू॑र्य तरु॒ष्य॒तः ॥ ६६ ॥

अनु॑ ते॒ शुष्मं॑ तु॒रय॑न्तमीयतुः क्षो॒णी शिशुं॒ न मा॒तरा॑।
विश्वा॑स्ते॒ स्पृधः॑ श्नथयन्त म॒न्यवे॑ वृ॒त्रं यदि॑न्द्र॒ तूर्व॑सि ॥ ६७ ॥

य॒ज्ञो दे॒वानां॒ प्रत्ये॑ति सु॒म्नमादि॑त्यासो॒ भव॑ता मृड॒यन्तः॑।
आ वो॒ऽर्वाची॑ सु॒म॒तिर्व॑वृत्याद॒ꣳहोश्चि॒द्या व॑रिवो॒वित्त॒रास॑त् ॥ ६८ ॥

अद॑ब्धेभिः सवितः पा॒युभि॒ष्ट्वꣳ शि॒वेभि॑र॒द्य परि॑ पाहि नो॒ गय॑म्।
हिर॑ण्यजिह्वः सुवि॒ताय॒ नव्य॑से॒ रक्षा॒ माकि॑र्नोऽअ॒घश॑ꣳसऽईशत ॥ ६९ ॥

प्र वी॑र॒या शुच॑यो दद्रिरे वामध्व॒र्युभि॒र्मधु॑मन्तः सु॒तासः॑।
वह॑ वायो नि॒युतो॑ या॒ह्यच्छा॒ पिबा॑ सु॒तस्यान्ध॑सो॒ मदा॑य ॥ ७० ॥

गाव॒ऽउपा॑वताव॒तं म॒ही य॒ज्ञस्य॑ र॒प्सुदा॑। उ॒भा कर्णा॑ हिर॒ण्यया॑ ॥ ७१ ॥

काव्य॑योरा॒जाने॑षु॒ क्रत्वा॒ दक्ष॑स्य दुरो॒णे। रि॒शाद॑सा स॒धस्थ॒ऽआ ॥ ७२ ॥

दैव्या॑वध्व॒र्यू आ ग॑त॒ꣳ रथे॑न॒ सूर्य॑त्वचा।
मध्वा॑ य॒ज्ञꣳ सम॑ञ्जाथे ॥ तं प्र॒त्नथा॒यं वे॒नः ॥ ७३ ॥

ति॒र॒श्चीनो॒ वित॑तो र॒श्मिरे॑षाम॒धः स्वि॑दा॒सी३दु॒परि॑ स्विदासी३त्।
रे॒तो॒धाऽआ॑सन्महि॒मान॑ऽआसन्त्स्व॒धाऽअ॒वस्ता॒त्प्रय॑तिः प॒रस्ता॑त् ॥ ७४ ॥

आ रोद॑सीऽअपृण॒दा स्व॑र्म॒हज्जा॒तं यदे॑नम॒पसो॒ऽअधा॑रयन्।
सोऽअ॑ध्व॒राय॒ परि॑ णीयते क॒विरत्यो॒ न वाज॑सातये॒ चनो॑हितः ॥ ७५ ॥

उक्थेभिर्वृत्रहन्तमा या मन्दाना चिदा गिरा । आङ्गूषैराविवासतः ॥ ७६ ॥

उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये । सुमृडीका भवन्तु नः ॥ ७७ ॥

ब्रह्माणि मे मतयः शꣳ सुतासः शुष्मऽइयर्ति प्रभृतो मेऽअद्रिः ।
आ शासते प्रति हर्यन्त्युक्थेमा हरी वहतस्ता नोऽअच्छ ॥ ७८॥

अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ २ऽअस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥७९॥

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञऽउग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ ८० ॥

इमाऽउ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ ८१ ॥

यस्यायं विश्वऽआर्यो दासः शेवधिपाऽअरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सोऽअज्यते रयिः ॥८२॥

अयꣳ सहस्रमृषिभिः सहस्कृतः समुद्रऽइव पप्रथे ।
सत्यः सोऽअस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥८३॥

अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परि पाहि नो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशꣳसऽईशत ॥ ८४ ॥

आ नो यज्ञं दिविस्पृशं वायो याहि सुमन्मभिः ।
अन्तः पवित्रऽउपरि श्रीणानोऽयꣳ शुक्रोऽअयामि ते ॥८५॥

इन्द्रवायू सुसन्दृशा सुहवेह हवामहे ।
यथा नः सर्वऽइज्जनोऽनमीवः सङ्गमे सुमनाऽअसत् ॥ ८६ ॥

ऋधगित्था स मर्त्यः शशमे देवतातये ।
यो नूनं मित्रावरुणावभिष्टयऽआचक्रे हव्यदातये ॥ ८७ ॥

आ यातमुप भूषतं मध्वः पिबतमश्विना ।
दुग्धं पयो वृषणा जेन्यावसू मा नो मर्धिष्टमा गतम् ॥८८॥

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥८९॥

चन्द्रमा ऽ अप्स्वन्तरा सुपर्णो धावते दिवि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहंᳪं हरिरेति कनिक्रदत् ॥ ९० ॥

देवं-देवं वोऽवसे देवं-देवमभिष्टये ।
देवं-देवᳪं हुवेम वाजसातये गृणन्तो देव्या धिया ॥ ९१ ॥

दिवि पृष्टो ऽ अरोचताग्निर्वैश्वानरो बृहन् ।
क्ष्मया वृधान ऽ ओजसा चनोहितो ज्योतिषा बाधते तमः ॥९२॥

इन्द्राग्नी ऽ अपादियं पूर्वागात्पद्वतीभ्यः ।
हित्वी शिरो जिह्वया वावदच्चरत्त्रिᳪंशत्पदा न्यक्रमीत् ॥ ९३ ॥

देवासो हि ष्मा मनवे समन्यवो विश्वे साकᳪं सरातयः ।
ते नो ऽ अद्य ते ऽ अपरं तुचे तु नो भवन्तु वरिवोविदः ॥९४॥

अपाधमदभिशस्तीरशस्तिहाथेन्द्रो द्युम्न्याभवत् ।
देवास्त ऽ इन्द्र सख्याय येमिरे बृहद्भानो मरुद्गण ॥ ९५ ॥

प्र व ऽ इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्रᳪं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ ९६ ॥

अस्येदिन्द्रो वावृधे वृष्ण्यᳪं शवो मदे सुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोऽनु ष्टुवन्ति पूर्वथा ।
इमा ऽ उ त्वा यस्यायमयᳪं सहस्रमूर्ध्व ऽ ऊ षु णः ॥९७॥

इति त्रयस्त्रिंशोऽध्यायः ।

## अथ चतुस्त्रिंशोऽध्यायः ।

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥ १ ॥

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ २ ॥

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऽऋते किं चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३ ॥

येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥

यस्मिन्नृचः साम यजूꣳषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिꣳश्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन ऽइव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ॥

पितुं नु स्तोषं महो धर्माणं तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥ ७ ॥

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण ऽआयूꣳषि तारिषः ॥ ८ ॥

अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥ ९ ॥

सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ १० ॥

पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः । सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥ ११ ॥

त्वमग्ने प्रथमो ऽअङ्गिरा ऽऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ १२ ॥

त्वं नो ऽअग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य ।
त्राता तोकस्य तनये गवामस्यनिमेषꣳ रक्षमाणस्तव व्रते ॥ १३ ॥

उत्तानायामव भरा चिकित्वान्त्सद्यः प्रवीता वृषणं जजान ।
अरुषस्तूपो रुशदस्य पाज ऽ इडायास्पुत्रो वयुनेऽजनिष्ट ॥ १४ ॥

इडायास्त्वा पदे वयं नाभा पृथिव्या ऽ अधि । जातवेदो निधीमह्यग्ने हव्याय वोढवे ॥१५॥

प्र मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे ऽ अङ्गिरस्वत् ।
सुवृक्तिभि स्तुवत ऽ ऋग्मियायार्चामार्कं नरे विश्रुताय ॥ १६ ॥

प्र वो महे महि नमो भरध्वमाङ्गूष्यंꣳ शवसानाय साम ।
येना नः पूर्वे पितरः पदज्ञा ऽ अर्चन्तो ऽ अङ्गिरसो गा ऽ अविन्दन् ॥ १७ ॥

इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयाꣳसि ।
तितिक्षन्ते ऽ अभिशस्तिं जनानामिन्द्र त्वदा कश्चन हि प्रकेतः ॥१८॥

न ते दूरे परमा चिद्रजाꣳस्या तु प्र याहि हरिवो हरिभ्याम् ।
स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधाने ऽ अग्नौ ॥१९॥

अषाढं युत्सु पृतनासु पप्रिꣳ स्वर्षामप्सां वृजनस्य गोपाम् ।
भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥ २० ॥

सोमो धेनुꣳ सोमो ऽ अर्वन्तमाशुꣳ सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यꣳ सभेयं पितृश्रवणं यो ददाशदस्मै ॥ २१ ॥

त्वमिमा ऽ ओषधीः सोम विश्वास्त्वमपो ऽ अजनयस्त्वं गाः ।
त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ २२ ॥

देवेन नो मनसा देव सोम रायो भागꣳ सहसावन्नभि युध्य ।
मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा गविष्टौ ॥ २३ ॥

अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् ।
हिरण्याक्षः सविता देव ऽ आगाद्दधद्रत्ना दाशुषे वार्याणि ॥ २४ ॥

हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी ऽ अन्तरीयते ।
अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ॥ २५ ॥

हिरण्यहस्तो ऽ असुरः सुनीथः सुमृडीकः स्ववाँ यात्वर्वाङ् ।

अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥ २६ ॥

ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता ऽअन्तरिक्षे ।
तेभिर्नो ऽअद्य पथिभिः सुगेभी रक्षा च नो ऽअधि च ब्रूहि देव ॥२७॥

उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभिः ॥२८॥

अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे निह्वये वां वृधे च नो भवतं वाजसातौ ॥ २९ ॥

द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी ऽउत द्यौः ॥३०॥

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ३१ ॥

आ रात्रि पार्थिवꣳ रजः पितुरप्रायि धामभिः ।
दिवः सदाꣳसि बृहती वि तिष्ठस ऽआ त्वेषं वर्तते तमः ॥३२॥

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ॥३३॥

प्रातरग्निं प्रातरिन्द्रꣳ हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।
प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रꣳ हुवेम ॥ ३४ ॥

प्रातर्जितं भगमुग्रꣳ हुवेम वयं पुत्रमदितेर्यो विधर्ता ।
आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥ ३५ ॥

भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः ।
भग प्र नो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥ ३६ ॥

उतेदानीं भगवन्तः स्यामोत प्रपित्व ऽउत मध्ये ऽअह्नाम् ।
उतोदिता मघवन्त्सूर्यस्य वयं देवानाꣳ सुमतौ स्याम ॥ ३७ ॥

भग ऽएव भगवाँ२ऽ अस्तु देवास्तेन वयं भगवन्तः स्याम ।
तं त्वा भग सर्व ऽइज्जोहवीति स नो भग पुर ऽएता भवेह ॥ ३८ ॥

समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय ।
अर्वाचीनं वसुविदं भगं नो रथमिवाश्वा वाजिन ऽआ वहन्तु ॥ ३९ ॥

अश्वा॑वती॒र्गोम॑तीर्न ऽ उ॒षासो॑ वी॒रव॑तीः सद॑मुच्छन्तु भ॒द्राः।
घृ॒तं दुहा॑ना वि॒श्वतः॒ प्रपी॑ता यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ४० ॥

पूष॒न्तव॑ व्र॒ते व॒यं न रि॑ष्येम॒ कदा॑ च॒न। स्तो॒तार॑स्त ऽ इ॒ह स्म॑सि ॥ ४१ ॥

प॒थस्प॑थः॒ परि॑पतिं वच॒स्या कामे॑न कृ॒तो ऽ अ॒भ्या॑नड॒र्कम्।
स नो॑ रासच्छु॒रुध॑श्च॒न्द्राग्रा॒ धियं॑-धियᳬ सीषधाति॒ प्र पू॒षा ॥ ४२ ॥

त्रीणि॑ प॒दा वि च॑क्रमे॒ विष्णु॑र्गो॒पा ऽ अदा॑भ्यः। अतो॒ धर्मा॑णि धा॒रय॑न् ॥४३॥
तद्विप्रा॑सो विप॒न्यवो॑ जागृ॒वाᳬसः॒ समि॑न्धते। विष्णो॒र्यत्प॑र॒मं प॒दम् ॥ ४४ ॥

घृ॒तव॑ती॒ भुव॑नानामभि॒श्रियो॒र्वी पृ॒थ्वी म॑धु॒दुघे॑ सु॒पेश॑सा।
द्यावा॑पृथि॒वी वरु॑णस्य॒ धर्म॑णा॒ विष्क॑भिते ऽ अ॒जरे॒ भूरि॑रेतसा ॥ ४५ ॥

ये नः॑ स॒पत्ना॒ ऽ अप॒ ते भ॑वन्त्विन्द्रा॒ग्निभ्या॒मव॑ बाधामहे॒ तान्।
वस॑वो रु॒द्रा ऽ आ॑दि॒त्या ऽ उ॑परि॒स्पृशं॑ मो॒ग्रं चे॒त्तार॑मधिरा॒जम॑क्रन् ॥ ४६ ॥

आ ना॑सत्या त्रि॒भिरे॑काद॒शैरि॒ह दे॒वेभि॑र्यातं मधु॒पेय॑मश्विना।
प्रायु॒स्तारि॑ष्टं॒ नी रपा॑ᳬसि मृक्षत॒ᳬ सेध॑तं॒ द्वेषो॒ भव॑तᳬ सचा॒भुवा॑ ॥४७॥

ए॒ष व॒ स्तोमो॑ मरुत ऽ इ॒यं गीर्मा॑न्दा॒र्यस्य॑ मा॒न्यस्य॑ का॒रोः।
एषा या॑सीष्ट त॒न्वे व॒यां वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥ ४८ ॥

स॒हस्तो॑माः स॒हच्छ॑न्दस ऽ आ॒वृतः॑ स॒हप्र॑मा ऽ ऋष॑यः स॒प्त दैव्याः॑।
पूर्वे॑षां॒ पन्था॑मनु॒दृश्य॒ धीरा॑ ऽ अ॒न्वाले॑भिरे र॒थ्यो॒ न र॒श्मीन् ॥ ४९ ॥

आयु॒ष्यं॒ वर्च॒स्य॒ᳬ रा॒यस्पोष॒मौद्भि॑दम्।
इ॒दᳬ हिर॑ण्यं॒ वर्च॑स्व॒ज्जैत्रा॒याविश॑तादु॒ माम् ॥ ५० ॥

न तद्रक्षा॑ᳬसि॒ न पि॑शा॒चास्त॑रन्ति दे॒वाना॒मोजः॑ प्रथम॒जᳬ ह्येतत्।
यो बि॒भर्ति॑ दाक्षाय॒णᳬ हिर॑ण्य॒ᳬ स दे॒वेषु॑ कृणुते दी॒र्घमायुः॑
स म॑नु॒ष्ये॒षु कृणुते दी॒र्घमायुः॑ ॥ ५१ ॥

यदाब॑ध्नन्दाक्षाय॒णा हिर॑ण्यᳬ श॒तानी॑काय सुमन॒स्यमा॑नाः।
तन्म॒ ऽ आ ब॑ध्नामि श॒तशा॑रदा॒यायु॑ष्माञ्ज॒रद॑ष्टि॒र्यथास॑म् ॥ ५२ ॥

उत नोऽहिर्बुध्न्यः शृणोत्वज ऽ एकपात्पृथिवी समुद्रः ।
विश्वे देवा ऽ ऋतावृधो हुवाना स्तुता मन्त्राः कविशस्ता ऽ अवन्तु ॥ ५३ ॥

इमा गिर ऽ आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो ऽ अर्यमा भगो नस्तुविजातो वरुणो दक्षो ऽ अꣳशः ॥ ५४ ॥

सप्त ऽ ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो ऽ अस्वप्नजौ सत्रसदौ च देवौ ॥५५॥

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उप प्र यन्तु मरुतः सुदानव ऽ इन्द्र प्राशूर्भवा सचा ॥ ५६ ॥

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो ऽ अर्यमा देवा ऽ ओकाꣳसि चक्रिरे ॥ ५७ ॥

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥
य ऽ इमा विश्वा विश्वकर्मा यो नः पितान्नपतेऽन्नस्य नो देहि ॥ ५८ ॥

इति चतुस्त्रिंशोऽध्यायः ।

## अथ पञ्चत्रिंशोऽध्यायः ।

अपेतो यन्तु पणयोऽसुम्ना देवपीयवः । अस्य लोकः सुतावतः ।
द्युभिरहोभिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै ॥ १ ॥

सविता ते शरीरेभ्यः पृथिव्याँल्लोकमिच्छतु । तस्मै युज्यन्तामुस्रियाः ॥ २ ॥

वायुः पुनातु सविता पुनात्वग्नेर्भ्राजसा सूर्यस्य वर्चसा । वि मुच्यन्तामुस्रियाः॥३॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज ऽ इत्किलासथ यत्सनवथ पूरुषम्॥४॥

सविता ते शरीराणि मातुरुपस्थ ऽ आ वपतु । तस्मै पृथिवि शं भव ॥ ५ ॥

प्रजापतौ त्वा देवतायामुपोदके लोके नि दधाम्यसौ । अप नः शोशुचदघम् ॥ ६ ॥

परं मृत्यो ऽ अनु परेहि पन्थां यस्ते ऽ अन्य ऽ इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान् ॥ ७ ॥

शं वातः शꣳ हि ते घृणिः शं ते भवन्त्विष्टकाः ।
शं ते भवन्त्वग्नयः पार्थिवासो मा त्वाभि शूशुचन् ॥ ८ ॥

कल्पन्तां ते दिशस्तुभ्यमापः शिवतमास्तुभ्यं भवन्तु सिन्धवः ।
अन्तरिक्षꣳ शिवं तुभ्यं कल्पन्तां ते दिशः सर्वाः ॥ ९ ॥

अश्मन्वती रीयते सꣳ रभध्वमुत्तिष्ठत प्र तरता सखायः ।
अत्रा जहीमोऽशिवा येऽअसञ्छिवान्वयमुत्तरेमाभि वाजान् ॥ १० ॥

अपाघमप किल्बिषमप कृत्यामपो रपः। अपामार्ग त्वमस्मदप दुःष्वप्न्यꣳ सुव ॥११॥

सुमित्रिया नऽआपऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु
योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ १२ ॥

अनड्वाहमन्वारभामहे सौरभेयꣳ स्वस्तये। स नऽइन्द्रऽइव देवेभ्यो वह्निः सन्तारणो भव १३

उद्वयं तमसस्परि स्वः पश्यन्तऽउत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥१४॥

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरोऽअर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ १५ ॥

अग्नऽआयूꣳषि पवसऽआ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥१६॥

आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमान्त्स्वाहा ॥ १७ ॥

परीमे गामनेषत पर्यग्निमहृषत । देवेष्वक्रत श्रवः कऽइमाँ२ऽआ दधर्षति ॥ १८ ॥

क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्यं गच्छ[illegible]हः ।
इहैवायमितरो जातवेदा देवेभ्यो हव्यं वह[illegible] ॥ १९ ॥

वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहिता[illegible] ।
मेदसः कुल्याऽउप तान्त्स्रवन्तु सत्याऽएष[illegible]सं नमन्ताꣳ स्वाहा ॥ २० ॥

स्योना पृथिवि नो भवानृक्षरा निवेशनी[illegible]सप्रथाः। अप नः शोशुचदघम्॥२१

अस्मात्त्वमधि जातोऽसि[illegible]सौ स्वर्गाय लोकाय स्वाहा ॥२२॥

[illegible]ध्यायः ।

## अथ षट्त्रिंशोऽध्यायः ।

ऋचं वाचं प्र पद्ये मनो यजुः प्र पद्ये साम प्राणं प्र पद्ये चक्षुः श्रोत्रं प्र पद्ये ।
वागोजः सहौजो मयि प्राणापानौ ॥ १ ॥

यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्दधातु ।
शं नो भवतु भुवनस्य यस्पतिः ॥ २ ॥

भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ३ ॥

कया नश्चित्र ऽआ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ ४ ॥

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु ॥ ५ ॥

अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ ६ ॥

कया त्वं न ऽऊत्याभि प्र मन्दसे वृषन् । कया स्तोतृभ्य ऽआ भर ॥ ७ ॥

इन्द्रो विश्वस्य राजति । शं नो ऽअस्तु द्विपदे शं चतुष्पदे ॥ ८ ॥

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा । शं न ऽइन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥९

शं नो वातः पवतांश्च शं नस्तपतु सूर्यः । शं नः कनिक्रदद्देवः पर्जन्यो ऽअभि वर्षतु ॥१०

अहानि शं भवन्तु नः शंश्च रात्रीः प्रति धीयताम् ।
शं न ऽइन्द्राग्नी भवतामवोभिः शं न ऽइन्द्रावरुणा रातहव्या ।
शं न ऽइन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः ॥ ११ ॥

शं नो देवीरभि ... भवन्तु पीतये । शं योरभि स्रवन्तु नः १२ ॥

स्योना पृथिवि ... निवेशनी । यच्छा नः शर्म सप्रथाः ॥ १३ ॥

आपो हि ष्ठा ... ऊर्जे दधातन । महे रणाय चक्षसे ॥ १४ ॥

यो वः शिवतमो ... येह नः । उशतीरिव मातरः ॥ १५ ॥

तस्मा ऽअरं गमा ... जिन्वथ । आपो जनयथा च नः ॥१६ ॥

द्यौः शान्तिरन्तरिक्षंश्च श ... षधयः शान्तिः ।
वनस्पतयः शान्तिर्विश्वे दे ... न्तिरेव शान्तिः
सा मा शान्तिरेधि ॥ १७ ॥

दृते दृᳫंह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे ॥१८॥
दृते दृᳫंह मा। ज्योक्ते सन्दृशि जीव्यासं ज्योक्ते सन्दृशि जीव्यासम् ॥ १९ ॥
नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे।
अन्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यᳫं शिवो भव ॥ २० ॥
नमस्ते ऽअस्तु विद्युते नमस्ते स्तनयित्नवे।
नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥ २१ ॥
यतो-यतः समीहसे ततो नो ऽअभयं कुरु। शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ॥२२॥
सुमित्रिया न ऽआप ऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु
योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ २३ ॥
तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतᳫं शृणुयाम शरदः शतं प्र ब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥२४॥

इति षट्त्रिंशोऽध्यायः।

## अथ सप्तत्रिंशोऽध्यायः।

दे... त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। आ ददे नारिरसि ॥१॥
...ञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः।

इन्द्रस्यौजं स्थ मखस्यं वोऽद्य शिरों राध्यासं देवयजंने पृथिव्याः। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ ६ ॥

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता। अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ ७ ॥

मखस्य शिरोंऽसि। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखस्य शिरोंऽसि। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखस्य शिरोंऽसि। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ ८ ॥

अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजंने पृथिव्याः। मखायं त्वा मखस्यं त्वा शीर्ष्णे। अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजंने पृथिव्याः। मखायं त्वा मखस्यं त्वा शीर्ष्णे। अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजंने पृथिव्याः। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ ९ ॥

ऋजवें त्वा साधवें त्वा सुक्षित्यै त्वा। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे। मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ १० ॥

यमायं त्वा मखायं त्वा सूर्यस्य त्वा तपसे। देवस्त्वां सविता मध्वान[illegible]
स्पृशस्पाहि। [illegible] गोंऽसि ॥ ११ ॥

समग्निरग्निना गत सं दैवेन सवित्रा सꣳ सूर्येणारोचिष्ट ।
स्वाहा समग्निस्तपसा गत सं दैव्येन सवित्रा सꣳ सूर्येणारूरुचत ॥ १५ ॥

धर्ता दिवो वि भाति तपसस्पृथिव्यां धर्ता देवो देवानाममर्त्यस्तपोजाः ।
वाचमस्मे नि यच्छ देवायुवम् ॥ १६ ॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान ऽआ वरीवर्ति भुवनेष्वन्तः ॥ १७ ॥

विश्वासां भुवां पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पते ।
देवश्रुत्त्वं देव घर्म देवो देवान्पाह्यत्र प्रावीरनु वां देववीतये।
मधु माध्वीभ्यां मधु माधूचीभ्याम् ॥ १८ ॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वो ऽ अध्वरं दिवि देवेषु धेहि ॥१९ ॥

पिता नोऽसि पिता नो बोधि नमस्ते ऽअस्तु मा मा हिꣳसीः । त्वष्टृमन्तस्त्वा सपेम पुत्रान्पशून्मयि धेहि प्रजामस्मासु धेह्यरिष्टाहꣳ सह पत्या भूयासम् ॥ २० ॥

अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ।
रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ॥ २१ ॥

इति सप्तत्रिंशोऽध्यायः ।

अथाष्टत्रिंशोऽ

गायत्रं छन्दोऽसि त्रैष्टुभं छन्दोऽसि द्यावापृथिवीभ्यां त्वा परि गृह्णाम्यन्तरिक्षेणोप यच्छामि।
इन्द्राश्विना मधुनः सारघस्य घर्मं पात वसवो यजत वाट् ।
स्वाहा सूर्यस्य रश्मये वृष्टिवनये ॥ ६ ॥

समुद्राय त्वा वाताय स्वाहा सरिराय त्वा वाताय स्वाहा ।
अनाधृष्याय त्वा वाताय स्वाहाप्रतिधृष्याय त्वा वाताय स्वाहा ।
अवस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहा ॥ ७ ॥

इन्द्राय त्वा वसुमते रुद्रवते स्वाहेन्द्राय त्वादित्यवते स्वाहेन्द्राय त्वाभिमातिघ्ने स्वाहा।
सवित्रे त्व ऽ ऋभुमते विभुमते वाजवते स्वाहा बृहस्पतये त्वा विश्वदेव्यावते स्वाहा ॥८॥
यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्माय स्वाहा घर्मः पित्रे ॥ ९ ॥

विश्वा ऽ आशा दक्षिणसद्विश्वान्देवानयाडिह ।
स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना ॥ १० ॥

दिवि धा ऽ इमं यज्ञमिमं यज्ञं दिवि धाः । स्वाहाग्नये यज्ञियाय शं यजुर्भ्यः ॥ ११ ॥

अश्विना घर्मं पातꣳ हार्द्वानमहर्दिवाभिरूतिभिः ।
तन्त्रायिणे नमो द्यावापृथिवीभ्याम् ॥ १२ ॥

अपातामश्विना घर्ममनु द्यावापृथिवी ऽ अमꣳसाताम् । इहैव रातयः सन्तु ॥ १३ ॥
इषे पिन्वस्वोर्जे पिन्वस्व ब्रह्मणे पिन्वस्व क्षत्राय पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व ।
घर्मासि सुधर्मामेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रं धारय विशं [illegible]
[illegible] हा प्रति [illegible]

या ते घर्म दि॒व्या शुग्या गा॑य॒त्र्या॑ᳫं ह॑वि॒र्धाने॑ ।
सा त॒ ऽ आ प्या॑यतां॒ निष्ट्या॑यतां॒ तस्यै॑ ते॒ स्वाहा॑ ।
या ते॑ घर्मा॒न्तरि॑क्षे॒ शुग्या त्रि॒ष्टुभ्या॑ग्नी॑ध्रे ।
सा त॒ ऽ आ प्या॑यतां॒ निष्ट्या॑यतां॒ तस्यै॑ ते॒ स्वाहा॑ ।
या ते॑ घर्म पृथि॒व्या॑ᳫं शुग्या जग॑त्या॑ᳫं सद॒स्या ।
सा त॒ ऽ आ प्या॑यतां॒ निष्ट्या॑यतां॒ तस्यै॑ ते॒ स्वाहा॑ ॥ १८ ॥

क्षत्रस्य॑ त्वा प॒रस्पा॑य॒ ब्रह्म॑णस्त॒न्वं॑ पाहि ।
विश॑स्त्वा॒ धर्म॑णा व॒यमनु॒ क्रामाम सुवि॒ताय॒ नव्य॑से ॥ १९ ॥

चतु॑ःस्रक्ति॒र्नाभि॑र्ऋ॒तस्य॑ स॒प्रथा॑ः स नो॑ वि॒श्वायु॑ः स॒प्रथा॑ः स नः॑ स॒र्वायु॑ः स॒प्रथा॑ः ।
अप॒ द्वेषो॒ ऽअप॒ ह्वरो॒ऽन्यव्र॑तस्य सश्चिम ॥ २० ॥

घर्मै॒तत्ते॒ पुरी॑षं॒ तेन॒ वर्ध॑स्व॒ चा च॑ प्यायस्व । व॒र्धि॒षी॒महि॑ च व॒यमा च॑ प्यासिषीमहि ॥२१

अचि॑क्रद॒द्वृषा॒ हरि॑र्म॒हान्मि॒त्रो न द॑र्श॒तः । सᳫं सूर्ये॑ण दिद्युतदु॒दधि॑र्नि॒धिः ॥२२॥

सु॒मि॒त्रि॒या न॒ ऽआप॒ ऽ ओष॑धयः सन्तु दु॒र्मि॒त्रि॒यास्तस्मै॑ सन्तु
यो॒ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः ॥ २३ ॥

उद्व॒यन्तम॑स॒स्परि॒ स्वः॒ पश्य॑न्त॒ ऽ उत्त॑रम् । दे॒वं दे॑व॒त्रा सूर्य॒मग॑न्म॒ ज्योति॑रुत्त॒मम् ॥२४॥

एधो॑ऽस्येधिषी॒महि॑ स॒मिद॑सि॒ तेजो॑ऽसि॒ तेजो॒ मयि॑ धेहि ॥ २५ ॥

याव॑ती॒ द्यावा॑पृथि॒वी याव॑च्च स॒प्त सिन्ध॑वो वितस्थि॒रे ।
ताव॑न्तमिन्द्र ते॒ ग्रह॑मू॒र्जा गृ॑ह्णा॒म्यक्षि॑तं॒ मयि॑ गृह्णा॒म्यक्षि॑तम् ॥ २६ ॥

मयि॒ त्यदि॑न्द्रि॒यं बृ॒हन्मयि॒ दक्षो॒ मयि॒ क्रतुः॑ ।
घ॒र्मस्त्रि॒शुग्वि रा॑जति वि॒राजा॒ ज्योति॑षा स॒ह ब्रह्म॑णा॒ तेज॑सा स॒ह ॥ २७ ॥

पय॑सो॒ रेत॒ ऽआभृ॑तं॒ तस्य॒ दोह॑मशीम॒ह्युत्त॑रामुत्त॒राᳫं समा॑म् ।
त्विषः॑ सं॒वृक् क्रत्वे॒ दक्ष॑स्य ते सुषु॒म्णस्य॑ ते सुषुम्णाग्निहु॒तः ।
इन्द्र॑पीतस्य प्र॒जाप॑तिभक्षितस्य॒ मधु॑मत॒ ऽ उप॑हूत॒ ऽ उप॑हूतस्य भक्षयामि ॥२८॥

इत्यष्टात्रिंशोऽध्यायः ।

## अथैकोनचत्वारिंशोऽध्यायः ।

स्वाहा प्राणेभ्यः साधिपतिकेभ्यः । पृथिव्यै स्वाहाग्नये स्वाहान्तरिक्षाय स्वाहा वायवे स्वाहा । दिवे स्वाहा सूर्याय स्वाहा ॥ १ ॥

दिग्भ्यः स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहाद्भ्यः स्वाहा वरुणाय स्वाहा । नाभ्यै स्वाहा पूताय स्वाहा ॥ २ ॥

वाचे स्वाहा प्राणाय स्वाहा प्राणाय स्वाहा । चक्षुषे स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा श्रोत्राय स्वाहा ॥ ३ ॥

मनसः काममाकूतिं वाचः सत्यमशीय ।
पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥ ४ ॥

प्रजापतिः सम्भ्रियमाणः सम्राट् सम्भृतो वैश्वदेवः सꣳसन्नो घर्मः प्रवृक्तस्तेजऽ उद्यतऽ आश्विनः पयस्यानीयमाने पौष्णो विष्यन्दमाने मारुतः क्लथन् । मैत्रः शरसि सन्ताय्यमाने वायव्यो ह्रियमाणऽ आग्नेयो हूयमानो वाग्घुतः ॥ ५ ॥

सविता प्रथमेऽहन्नग्निर्द्वितीये वायुस्तृतीयऽआदित्यश्चतुर्थे चन्द्रमाः पञ्चमऽ ऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे । मित्रो नवमे वरुणो दशमऽ इन्द्रऽ एकादशे विश्वे देवा द्वादशे ॥ ६ ॥

उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च । सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा ॥ ७ ॥

अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना । शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् ॥ ८ ॥

उग्रँल्लोहितेन मित्रꣳ सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा । भवस्य कण्ठ्यꣳ रुद्रस्यान्तःपार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् ॥ ९ ॥

लोमभ्यः स्वाहा लोमभ्यः स्वाहा त्वचे स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदोभ्यः स्वाहा मेदोभ्यः स्वाहा । माꣳसेभ्यः स्वाहा माꣳसेभ्यः स्वाहा स्नावभ्यः स्वाहा स्नावभ्यः स्वाहास्थभ्यः स्वाहास्थभ्यः स्वाहा मज्जभ्यः स्वाहा मज्जभ्यः स्वाहा । रेतसे स्वाहा पायवे स्वाहा ॥ १० ॥

आयासाय स्वाहा प्रायासाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा । शुचे स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा ॥ ११ ॥

तपसे स्वाहा तप्यते स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा घर्माय स्वाहा।
निष्कृत्यै स्वाहा प्रायश्चित्यै स्वाहा भेषजाय स्वाहा ॥ १२ ॥

यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा।
ब्रह्मणे स्वाहा ब्रह्महत्यायै स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा
द्यावापृथिवीभ्याᳬ स्वाहा ॥ १३ ॥

इत्येकोनचत्वारिंशोऽध्यायः।

## अथ चत्वारिंशोऽध्यायः।

ईशा वास्यमिदᳬ सर्वं यत्किं च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥ १ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतᳬ समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥

असुर्या नाम ते लोकाऽअन्धेन तमसावृताः।
ताँस्ते प्रेत्यापि गच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥

अनेजदेकं मनसो जवीयो नैनद्देवाऽआप्नुवन्पूर्वमर्षत्।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

तदेजति तन्नैजति तद्दूरे तद्वन्तिके।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न वि चिकित्सति ॥ ६ ॥

यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोकऽएकत्वमनुपश्यतः ॥ ७ ॥

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरᳬ शुद्धमपापविद्धम्।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥

अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।
ततो भूयऽइव ते तमो यऽउ सम्भूत्याᳬं रताः ॥ ९ ॥

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

सम्भूतिं च विनाशं च यस्तद्वेदोभयᳬं सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥ ११ ॥

अन्धन्तमः प्र विशन्ति येऽविद्यामुपासते ।
ततो भूयऽइव ते तमो यऽउ विद्यायाᳬं रताः ॥ १२ ॥

अन्यदेवाहुर्विद्यायाऽअन्यदाहुरविद्यायाः ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

विद्यां चाविद्यां च यस्तद्वेदोभयᳬं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥ १४ ॥

वायुरनिलममृतमथेदं भस्मान्तᳬं शरीरम् ।
ओ३म् क्रतो स्मर । क्लिबे स्मर । कृतᳬं स्मर ॥ १५ ॥

अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमऽउक्तिं विधेम ॥ १६ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
योऽसावादित्ये पुरुषः सोऽसावहम् ।
ओ३म् खं ब्रह्म ॥ १७ ॥ [ मंत्रसंख्या १९७५ ]

इति चत्वारिंशोऽध्यायः ।

इत्युत्तरविंशतिः समाप्ता ।

इति वाजसनेयि-माध्यन्दिन-शुक्ल यजुर्वेदसंहिता समाप्ता ।

# अथ काण्वशाखायां पाठविशेषाः।

वाजसनेयिसंहिता — प्रथम–दशकः। — काण्वसंहिता

मन्त्राङ्काः। — प्रथमोऽध्यायः। — मन्त्राङ्काः।

( १ ) अनुवाकांकाः।

१--२ इषे० ०पाहि वसोः पवित्रमसि॥ १–३ ॥

( २ )

२--४ द्यौरसि० ॥ विश्वधाः परमेण० ॥१॥ ०नातनक्मि विष्णो हव्यᳪ रक्षस्व॥१-४॥

( ३ )

५--७ अग्ने० ०मन्वेमि॥ १–३ ॥

८-११ धूरसि०॥ धूर्व तं यं०॥ ०मसि सस्नितमं वह्नितमं पप्रितमं०॥ ०विरव्यैपम्॥४-७॥

११ दृᳪहन्तां० ०हव्यᳪ रक्षस्व॥ ८ ॥

( ४ )

१२ पवित्रे० ०यज्ञं नयत सुधातुं यज्ञपतिं देवायुवम्॥ १–२ ॥

१३ युष्मा० ०यद्वोऽशुद्धः परा जघानैतद्वस्तच्छुन्धामि॥ ३–४ ॥

( ५ )

१४-१५ शर्मा० ॥ ३ ॥ बृहन्ग्रावासि० हव्यथ्ᳪ शमीष्व० हिं॥ १–४ ॥

१६ कुक्कुटो० ०आवद। वयथ्ᳪ संघाते-संघाते जेष्म॥ ५ ॥

०प्रतिपूता अरातयः ॥६॥ ०सविता प्रति गृह्णातु हिरण्यपाणिरच्छिद्रेण पाणिना॥ ७ ॥

( ६ )

१७-१८ धृष्टिं० ॥ ०उपदधामि द्विषतो वधाय ॥ २-४ ॥ चितं० ०ध्वम्॥ १–४ ॥

( ७ )

१९ शर्मा० ॥ दिवःस्कम्भन्यसि० ०वेत्तु॥ १–२ ॥

२० धान्य० ०देवान् धिनुहि यज्ञं धिनुहि यज्ञपतिम् ॥ धिनुहि माँ यज्ञन्यम्॥ ३ ॥

प्राणाय० ०सविता प्रति गृह्णातु हिरण्यपाणिरच्छि०॥ ०पयोऽसि॥ ४ ॥

[अ०२।२१] वेदोऽसि वेद येन त्वं देव वेद देवेभ्यो वेदोऽभवः ॥तेन मह्यं वेदो भव॥५॥

( ८ )

२१--२२ देवस्य० ॥ ०जगतीभिः सं मधुमतीः० ॥ ०सँ यौमि॥ १ ॥

२२--२३ इदमग्ने० ॥०हिंᳪसीदन्तरितᳪ रक्षोऽन्तरिता अरातयः ॥० ०त्वा॥ २–४ ॥

(९)

२४--२५ देवस्य॰ ॥ १ ॥ पृथिव्यै वर्मासि पृथिवि देवयज॰ ॰मौक्॥ १—३॥

२६—२७ अपाररुँ वध्यासं पृथिव्यै देवयजनात् । व्रजं॰ ॰पयस्वती च॥ ४—५ ॥

२८ पुरा॰ ॰तां धीरासो अनुदिश्य यजन्ते । द्विषतो वधोऽसि ॥ ६ ॥

(१०)

२९ प्रत्युष्ट९॰ ॰संमार्ग्मि॥ १ ॥

३० अदित्यै रास्नासीन्द्राण्यै संनहनम् । विष्णोर्वेष्पो॰ ॰पश्यामि॥ २ ॥

३० अग्नेर्जिह्वासि सुभूर्देवेभ्यः । धाम्ने-धाम्ने भव यजुषे यजुषे ।

३१ सवितुस्त्वा॰ ॰देवयजनम्॥ ३—४ ॥

० यस्ते प्राणः पशुषु प्रविष्टो देवानाँ विष्ठामनु यो वितस्थे ।
आत्मन्वान्त्सोम घृतवान्हि भूत्वाग्निं गच्छ स्वर्यजमानाय विन्द ॥ ५ ॥

[ दशानुवाकेषु पञ्चाशत् ॥५०॥]इति प्रथमोऽध्यायः । ॥५०॥

अथ द्वितीयोऽध्यायः ।

(१)

१—३ कृष्णो॰ देवेभ्यः॥ २ ॥ भूपतये स्वाहा॰ ॰स्वारिष्ठ्यै॥ १--३॥

३—५ यजमानस्य परिधिरस्यग्निरिळ ईलितः ।३ ॰सदन्तु॥ ४—७ ॥

६ घृताच्यसि जुहूर्नाम॰ ॰प्रिये सदसि सीद ॥३ ॰यज्ञन्यम्॥ ८—९ ॥

(२)

७--८ अग्ने॰ ॥ १ ॥ अस्कन्नमद्याज्यं देवेभ्यः सम्भ्रि॰ ॰आस्थात्॥१-३॥

९ अग्ने॰ ॥ अवतां त्वा द्यावा॰ ॰त्वं द्यावापृथिवी॥४॥ ॰ज्योतिः॥४-५॥

३१ अत्र पितरो॰ ॰यथाभागमावृषायिषत॥ ६ ॥

१०,११, उपहूता॰ ध्रात्स्वाहा ॥ ७ ॥ उपहूतो द्यौ॰ स्वाहा॥ ७—८ ॥

१०,१४ मयीद॰ नः सन्त्वाशिषः ॥ अग्ने वाजजिद्वा॰ सम्मार्ज्मि॥ ९ ॥

(३)

० देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणम् । तदहं मनसे प्रब्रवीमि ॥ १ ॥

,, मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभे ॥
अनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यः ॥ २ ॥

० बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम् ॥
भूर्भुवः स्वर्निरस्तः पाप्मेदमहं बृहस्पतेः सदसि सीदामि ॥ ३ ॥

,, मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्याम् । प्रतिगृह्णामि पृथिव्यास्त्वा नाभौ सादयाम्यदित्या
उपस्थे । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ ४ ॥

,, आददेऽग्नेष्ट्वास्येन प्राश्नामि बृहस्पतेर्मुखेन ॥ या अप्स्वन्तर्देवतास्ता इद॰ शमयन्तु ॥५॥

,, स्वाहाकृतं जठरमिन्द्रस्य गच्छ ॥ घसिना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीद ॥६॥

,, इन्द्रस्य त्वा जठरे सादयामि ॥ प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वान् ॥ ७ ॥

,, प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाहि ॥
ऊर्गस्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रामुष्मिंल्लोकऽइह च ॥ ८ ॥

१४,१२,१३ एषा ते॰ महि ॥९॥ एतत्ते॰ मामव ॥१०॥ मनो ज्योति॰ प्रतिष्ठ ॥९-११॥

( ४ )

१५—१९ अग्नीषोम॰॥१॥ व्यन्तु वयोरिप्तो रिहाणा मरुतां पृषतीं गच्छ ॥ ०॥ ३ ॥

,, चक्षुष्पा असि ०॥४॥ ०परिधयश्च देवाः ! इमाँ॰ ०मां घत्तम् ॥४—६॥

( ५ )

२० अग्नेऽदब्धा॰ ॥ १ ॥ अग्नये सं॰ ०यशोभगिन्यै स्वाहा ॥

० उलूखले मुसले यश्च शूर्पेऽआशिश्लेष दृषदि यत्कपाले ॥ १-२ ॥

,, उत्प्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहा ।
आप्यायतां ध्रुवा हविषा घृतेन यज्ञं-यज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधो अदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ॥ ३ ॥

२१—२३ देवा गातुविदो गातुमित्वा गा॰ ०भागोऽसि ॥ ४—६ ॥

० वेपोऽस्युपवेपो द्विषतो ग्रीवा उप वेविद्धि । वेशाँऽअग्ने सुभग धारयेह ॥७॥

,, ऋद्धाः कर्मण्या अनपायिनो यथासन् ।
जुहोमि त्वा सुभग सौभगाय पुरूतमं पुरुहूत श्रवस्यन् ॥ ८ ॥

( ६ )

२४ सँ वर्चसा॰ ०विलिष्टम् ॥ १ ॥

० यज्ञ शं च त उप च । शिवे मे संतिष्ठस्वारिष्टे मे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व ॥२॥

२५–२६ दिवि० ०मन्वावर्त्ते॥ ३–५ ॥

( २७ ) अग्ने गृहपते सुगृहपतिरहं त्वया गृहपत्या भूयासम् ।

. . सुगृहपतिस्त्वं मया गृहपत्या भूयाः ॥ ६ ॥

,, अस्थूरि णो गार्हपत्यानि सन्तु शतं हिमाः ॥

तिग्मेन नस्तेजसा सꣳशिशाधि सूर्यस्यावृतमन्वावर्त्ते ॥ ७ ॥

[ अ० ५।३८ ] उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।

घृतं घृतयोने पिब प्र-प्र यज्ञपतिं तिर ॥ ८ ॥

० . ततोऽसि तन्तुरस्यनु मा तनुहि ।

अस्मिन्यज्ञेऽस्याꣳ साधु कृत्यायामस्मिन्नन्नेऽस्मिंल्लोके ॥ ९ ॥

,, इदं मे कर्मेदं वीर्यं पुत्रोऽनुसंतनोतु ।

२८ अग्ने० ०एवास्मि स एवास्मि॥ १० ॥

( ७ )

२९–३१ अग्नये० ०वृषायिषत॥ १–३ ॥

(३२)नमो वः पितरः शुष्माय नमो वः पितरस्तपसे ॥ नमो वः पितरो यज्जीवं तस्मै नमो वः पितरो रसाय॥ नमो वः पितरो घोराय मन्यवे स्वधायै वः पितरो नमः । एतद्वः पितरो वासो गृहान्नः पितरो दत्त ॥ ४ ॥

० उदायुषा स्वायुषोत्पर्जन्यस्य धामभिः । उदस्थाममृताँऽ अनु ॥ ५ ॥

३३–३४ आधत्त० ०पितॄन्॥ ६–७ ॥

[सप्तानुवाकेषु षष्टिः ॥६०॥] इति द्वितीयोऽध्यायः॥[११०]

---

## अथ तृतीयोऽध्यायः ।

( १ )

१–८ समिधा० ०भूम्ना भूमिरिव वरिम्णा० ॥ ५ ॥ ०द्युभिः॥ १–८ ॥

( २ )

० अग्निज्योतिषं त्वा वायुमतीं प्राणवतीम्॥ स्वर्ग्यꣳ स्वर्गायोपदधामि भास्वतीम् ॥

९ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ १ ॥

० सूर्यज्योतिषं त्वा वायुमतीं प्राणवतीम्। स्वर्ग्यां॒ स्वर्गायोपदधामि भास्वतीम् ॥
९ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ॥ २ ॥
॥ १० ॥ सुजू० ०वेतु स्वाहा॥ ३--४ ॥
० इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजाꣳ रमयतु प्रजापतिः।
,, अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहा॥ अग्नयेऽन्नादायान्नपतये स्वाहा ॥५॥
,, अनमित्रं मेऽअधरागनमित्रमुदक्कृधि॥इन्द्रानमित्रं पश्चान्मेऽनमित्रं पुरस्कृधि॥६॥
,, इन्द्रः पश्चादिन्द्रः पुरस्तादिन्द्रोऽअसाँ२ऽअभि पातु विश्वतः॥
इन्द्रो जिघांꣳसतां मनांꣳसि विषूचीना व्यस्यतात् ॥ ७ ॥
,, समिदसि समिद्धो मे अग्ने दीदिहि॥समेद्धा ते अग्ने दीद्यासम् ॥ ८ ॥

( ३ )

११-१३ उपप्रयन्तो० ० दातारा ऽइषाꣳ ०हुवे माम्॥ १-३ ॥
१४-१८ अयं ते० ०अदाभ्यम्॥ ४-९ ॥
१८-२० चित्रा० ०महो वो भक्षीय॥ १०-११ ॥
२०-२१ उर्ज स्थो० ०पोष॒ वो भक्षीय।
रेवती रमध्वमस्मिन्योनाऽअस्मिन्गोष्ठेऽस्मिन्क्षयेऽस्मिँल्लोके॥ १२ ॥
२१-२२ इहैव स्तेतो मापगात॥ ०पत्येन॥ १३ ॥
२२-२६ उप त्वा० ०संमस्रात्॥ १४-१८ ॥
२७ इळऽएह्यदितऽएहि काम्य एहिं। मयि वः कामधरणं भूयात्॥ १९ ॥
२८-३५ सोमान॒० ०प्रचोदयात्॥ २०-२७ ॥
३६ परि ते दूळभो रथोऽस्माँ२ऽअश्नो०। समिद्धो मा समर्धय प्रजया च धनेन च ॥२८॥

( ४ )

३७-३८ भूर्भुव० ०जाः प्रजया भूयासम्॥ सु० ॥१॥ ०पशून्मे पाहि।
आगन्म० ०वित्तमम्॥ १-२ ॥
३८-३९ अग्ने सम्राळभि ०स्व। ०गार्हपत्यः प्रजावान्वसुवित्तमः॥ ३ ॥
३९,४१ अग्ने गृह० ०स्व। गृहा० एमसि ॥ ४ ॥ ऊर्जं० ०बहुः॥ ४-५ ॥
४२-४३ गृहानु ०नतः। ०जावयः ॥ ६ ॥ अथो० ०शँयोः॥ ६-७ ॥

( ५ )

४४-४८ प्रघासिनो० ०मीढ्ळुषो ० ॥ ३॥ ०रिषस्पाहि॥ १-५ ॥

( ६ )

४९-५० पूर्णा० ०तौ दधौ । निहारं निहरामि ते निहारं निहरासि मे स्वाहा॥ १-२ ॥

( ७ )

५१-५६ अक्ष० ०न्वाहुवामहे० ॥ ३ ॥ ०सचेमहि॥ १-६ ॥

( ८ )

५७-६० एष ते० ०सुगं मेषाय०॥ ३ ॥ ०मासुतः॥ १-५ ॥

६१ एतेनं रुद्रावसेनं परो मू० ०शिवः शान्तोऽतीहि॥ ६ ॥

( ९ )

० वाजिनाँ वाजोऽवतु भक्षो ऽअस्मान्रेतः सिक्तममृतं बलाय ।
विश्वे देवा अभि यत्सम्बभूवुस्तन्मा धिनोतु प्रजया धनेन ॥ १ ॥

,, वाज्यहँ वाजिनस्योपहूत उपहूतस्य भक्षयामि । वाजे वाजी भूयासम् ॥ २ ॥

,, सवित्रा प्रसूता दैव्य आप उदन्तु ते तनूम् ॥ दीर्घायुत्वाय वर्चसे ॥ ३ ॥

(६२) कश्यपस्य त्र्यायुषं जमदग्नेस्त्र्यायुषम् ॥
यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥ ४ ॥

० येन धाता बृहस्पतेरिन्द्रस्य चायुषेऽवपत्। तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय ॥५

,, दीर्घायुत्वाय बलाय वर्चसे । सुप्रजास्त्वाय चासा अथो जीव शरदः शतम् ॥ ६ ॥

[ नवानुवाकेषु षट्सप्ततिः॥७६॥] इति तृतीयोऽध्यायः॥[१८६]

---

## अथ चतुर्थोऽध्यायः ।

( १ )

१-२ एदमगन्म० ०पुष्यन्॥ १-३ ॥

( २ )

३ महीनां० ॥वृत्रस्य कनीनकासि चक्षुर्दा० ०देहि॥ १ ॥

४-६ चित्पतिं० ०रमे॥ २-४ ॥

( ३ )

७-८ आकूत्यै० ०पृथिवी ऽउर्वन्तरिक्ष॥० ०पुष्यसे स्वाहा॥ १-२ ॥

( ४ )

९-१० ऋक्साम॥ ०ऊर्जं मे यच्छ ॥ २ ॥ ०स्योदर्चः॥ १-४ ॥

(५)

११ व्रतं कृणुत व्रतं कृणुत व्रतं कृणुत ॥ अग्नि० ०यज्ञियः॥ १ ॥
" दैवीं० ०सुमृळीकामभिष्टये॥ वर्चोदाँ विश्वधायस१ँ सु०॥ ०स्वाहा॥ २-३ ॥
१२-१४ श्वात्राः० ०पुनस्काधि॥ ४-६ ॥
(१५) पुनर्मनः पुनरायुर्म ऽआगात् पुनश्चक्षुः पुनः श्रोत्रं म आगात्॥
पुनः प्राणः पुनरात्मा म आगाद्वैश्वा० ०ग्निर्मा पातु दुरितादवद्यात्॥ ७ ॥
१६ त्वमग्ने० ०वस्वदात्॥ ८-९ ॥

(६)

१७–१८ एषा ते०॥१॥ ०तनुयन्त्रमशीय स्वाहा।चन्द्रमसि शुक्रमस्यमृ० वमसि ॥१-२॥
१९–२० चिदसि० ०सुप्रतीची भव ॥ ३ ॥ मित्रस्त्वा० ०क्षाय॥ ०सयूथ्यः॥३-४॥
" सा देवि० ०पुनरेहि॥ ५ ॥

(७)

२१-२२ वस्व्य०॥१॥ अदि० ०इळायास्पदमसि०॥२॥ असे ० त्वे रायो अस्मे रायः॥१-३॥
२२-२३ मा वय१ँ० ०वीरान्विदेय तव देवि सन्दृशि॥ ४ ॥

(८)

२४ एष ते० ०छन्दोमानाना१ँ साम्राज्यं गच्छतादिति मे सोमाय ब्रूतात्॥ १ ॥
२४-२५ आस्माको० न्वन्तु॥२॥ अभि त्यं० कृपास्वः॥ ३ ॥ प्रजास्त्वा०प्राणिहि॥२-४॥

(९)

२६ चन्द्रं त्वा चन्द्रेण क्रीणामि शुक्र१ँ शुक्रेणामृ० ॥१॥ तपस० पुषेयम्॥१-२॥
२७–२९ मित्रो० ॥३॥ स्वा० कृशानो । एते० दभन् ॥४॥ परि० ०वसु॥३–६॥

(१०)

३०-३३ अदित्या०।अस्तभ्नाद्यामृषभो०॥१॥०मद्रौ॥२॥०कुनीनकाम्।य० श्रिता॥१-३॥
३३–३७ उस्रा एतं धूर्वाहौ यु० ॥४॥ भद्रो ०सदनीमासीद ॥७॥ ०दुर्यान्॥ ४-८ ॥

[दशानुवाकेष्वेकोनपञ्चाशत्॥४९॥] इति चतुर्थोऽध्यायः॥ [२३५]

## अथ पञ्चमोऽध्यायः ।

(१)

१-४ अग्नेस्तनू० ०तसा अरेपसौ० नः ॥ ३ ॥ अग्ना अग्नि० ०स्वाहा ॥ १-४ ॥

(२)

५ आपतये त्वा गृह्णामि परिपतये त्वा गृ० ०शक्मन्नोजिष्ठाय ॥ १ ॥
,, अनाधृ० शस्तेन्यम् ॥ २ ॥ अञ्जसा सत्यमुपगेषथं सुविते मा धाः ।
६ अग्ने व्रतपास्त्वे व्रतपाः ॥ ३ ॥ या तव० ०या मम० ०स्पतिः ॥ २-४ ॥
७ अश्शु० ०प्यायस्व ॥ ५ ॥ आप्याययां० ०सुत्यामुदृचमशीय ॥ ५-६ ॥
"-८ एष्टा ०दिभ्यो नमो दिवे नमः पृथिव्यै ॥७॥ ०हरीशया ०स्वाहा॥७-८ ॥

(३)

९ तप्तायनी० ०व्यथितमवतान्मा नाथितम् ॥ १ ॥
,,-१० विदेरग्नेर्नभो० ०दधे । विदेरग्नेर्नभो० ०दधे । विदेरग्नेर्नभो० शुम्भस्व॥ २ ॥

(४)

११-१३ इन्द्रघोषस्त्वा० ०ह्यग्नेर्भस्मास्यग्नेः पुरीषमसि॥ १-४ ॥

(५)

१४-१५ युञ्जते० ०ष्टुतिः ॥१॥ इदं विष्णु० ०समूढ्ळमस्य पांसुरे स्वाहा॥१-२॥
१६-२१ इरा० ०विष्ण ऽ एते० स्वाहा ॥ ३ ॥ ०विष्णवे त्वा॥ १-९ ॥

(६)

२२-२३ देवस्य त्वा० रक्षसो ग्रीवा० ०वैष्णवीम्॥ १ ॥
२३ इदमहन्तं वलगमुद्वपामि यन्नो निष्ट्यो० मुद्वपामि यन्नः समानो०
०मुद्वपामि यन्नः सबन्धु० ०मुद्वपामि यन्नःसजातो० ०किरामि॥ २ ॥
२४ स्वराळसि० सत्रराळस्य० ॥जनराळसि० सर्वराळस्यमित्रहा॥ ३ ॥
२५ रक्षोहणो वलगहनः० ०हणो वल० ॥रक्षोहणो वल० वैष्णवान् ॥ ४ ॥
,, रक्षोहणौ वलगहना० रक्षोहणौ वलगहनौ० ०वैष्णवास्स्थ॥ ५ ॥

(७)

२६-२७ देवस्य त्वा० ०रक्षसो ग्रीवा० ०पर्यूहामि॥ १-३ ॥
२७-२८ ब्रह्म० ०जां दृंह ॥ ध्रुवासि ध्रुवोऽस्मिन्यजमान आयतने भूयात्० ०छाया॥४॥
२९-३० परि त्वा० ०देवमसि॥ ५-६ ॥

(८)

(३१-३२) विभू० मार्जालीयः ॥२॥ ऋतधामासि स्वर्ज्योतिः समुद्रोऽसि विश्वव्यचाः॥
अजोऽस्येकपादहिरसि बुध्न्यः ॥ ३ ॥सम्राळसि० ०हव्यसूदनः॥ १-४ ॥
० समूह्योऽसि विश्ववेदा ऊनातिरिक्तस्य प्रतिष्ठा ॥
३४ अग्नयः सगराः० ०पिपृत माग्नयो नमो वोऽस्तु मा मा हिंसिष्ट॥ ५ ॥

( ९ )

३५-४० ज्योतिरसि० ॥२॥ ०साता अयध्वम्०॥३॥ ॥६॥ ०या मर्म० ०स्पतिः॥१-७॥

( १० )

४१-४२ उरु विष्णो० ॥१॥ ०परेभ्यः पुरोऽवरेभ्यः॥२॥ तं त्वा०विष्णवे त्वा॥१-३॥

४२-४३ ओषधे०हिंसीः ॥ दिवं मा लेखी० ०वयं रुहेम॥ १-५ ॥

[दशानुवाकेषु पञ्चपञ्चाशत्॥५५॥] इति पञ्चमोऽध्यायः। [२९०]

## षष्ठोऽध्यायः ।

( १ )

१-२ देवस्य० ०रक्षसो ग्रीवा० ॥ १ ॥ ०दिवमग्रेणा० ०दृंहीः ॥ १-२ ॥

३-६ या ते० ० ॥अत्राहैतदु० भूरि ॥ ३ ॥ ब्रह्मव० ०पशुः ॥ ३-७ ॥

( २ )

७-९ उपावी० स्वदन्ताम् ॥ १ ॥ ०धर्षान्मानुषः ॥ देव ०हस्ताभ्याम् ॥ १-२ ॥

९-१० अग्नी००धीभ्यः प्रोक्षाम्यनु०॥३॥०सदन्तु० ॥४॥ ०यजमान आशिषा॥३-५॥

११-१२ घृतेनाक्तौ० ०माहिर्भूर्मा पृदाकुः ॥ ६-८ ॥

( ३ )

१२-१५नमस्त० पथ्या उप ॥१॥ देवी० ०आप्यायतां तत्ते निष्ट्या ०महोभ्यः॥१-४॥

१५-१६ओषधे० ॥६॥० ग्रोर्वीथाँ० स्तोकानाम् ॥ जुषाणोऽअग्नि० ०गच्छतम् ॥१-७ ॥

( ४ )

१८ सन्ते मनो० ॥रेळस्य० ०रिणन् ॥ १ ॥ वार्त० ०द्वेषः ॥ १-२ ॥

१९-२० घृतं० स्वाहा॥३॥ ०निधीत ऐन्द्र उं० ०निदीधे ॥४॥ देव००मदन्तु ॥३-५॥

( ५ )

२१ समुद्रं गच्छ स्वाहा देवंꣳ सवितारं गच्छ स्वाहा ॥ अन्तरिक्षं०

०सोमं गच्छ स्वाहा ॥ यज्ञं गच्छ स्वाहा नभो दिव्यं० ०हार्दंच्छ ॥ १ ॥

,, दिवं ते धूमो गच्छत्वन्तरिक्षं ज्योतिः ॥ पृ० ०स्वाहा ॥ २ ॥

२२ मापो० ०द्विष्मः ॥ ३-४ ॥

१७इदमापः प्रवहत यत्किं च दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम्॥५॥

( ६ )

२३-२४ हविष्मती० ०ध्वरम् ॥ १-३ ॥

( ७ )

२५-२७ हृदे त्वा० ऊर्ध्वो अध्वरं० ॥१॥ ॥४॥०देवत्रा दात००स्थ स्वाहा ॥ १-५ ॥

२८-२९ कार्षिरसि० ०रिषु स्वाहा ॥ ६-७ ॥

( ८ )

३०-३४ देवस्य त्वा० ०पोषदे ॥३॥ यत्ते ०यदुरा अन्तरिक्षे० ॥ ४ ॥ ०पिबत॥१-५॥

३५-३७ मा भे० ०वीळयेथा० ०सोमः ॥ ६ ॥ प्रागपा० ०ते वर्चः ॥ १-८ ॥

[ अष्टानुवाकेषु पञ्चाशत् ॥५०॥ ] इति षष्ठोऽध्यायः ॥ [३४०]

## अथ सप्तमोऽध्यायः ।

( १ )

१-३वाचस्प०॥२॥ ०स्वभवस्सूर्याय॥ ०यस्मै त्वेळे॥ तत्स०परिष्ठुता०व्यानाय त्वा॥१-३॥

( २ )

४ उपयाम० ०रायोवेषो यजस्व ॥ १ ॥

५-६ अन्त० स्वाहोर्वन्तरिक्षमन्वेमि स्वाकृतो ०त्वा स्वभवस्सूर्याय ॥ ०उदानाय त्वा॥२॥

( ३-५ )

७-११ आ वायो० ०र्माध्वीभ्यां त्वा ॥ १ ॥

( ६ )

१२-१३ तं प्रत्नथा० ०धिष्ठानमसि॥ १-२ ॥

१४-१५ अच्छिन्नस्य० ॥ ३ ॥ ०होत्रा मधोर्यत्स्विष्टँ यत्सुभृतँ यत्स्वाहा॥ ३-५ ॥

( ७ )

१६-१८ अयं वेन००मर्काय त्वा ॥१॥० द्रवन्त । ०गभस्तौ॥२॥ ०धिष्ठानमसि॥१-३॥

[१४-१५] अच्छिन्नस्य० ॥ ४ ॥ ०होत्रा मधोर्यत्स्विष्टँ यत्सुभृतँ यत्स्वाहा॥ ४-५ ॥

( ८ )

(१९-२१) ये देवासो० ०यज्ञपतिम् ॥ २ ॥ ०पाहि । सोमः पवते सोमः पवते
सोमः पवते ॥ ३ ॥ अस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्मै सु०
०सुभूताय पवते ब्रह्मवर्चसाय पवते॥ ० विश्वेभ्यस्त्वा देवेभ्यः ॥ ॥ १-४ ॥

( ९ )

२२-२३उपयाम० ०उक्थायुवं गृ० ॥ १ ॥ देवेभ्यस्त्वा देवायुवं गृह्णामि
यज्ञस्यायुषे मित्रावरुणाभ्यां त्वा देवायुवं गृ०युषे ॥ इन्द्राय त्वा देवायुवं

गृ० ष इन्द्राग्निभ्यां त्वा देवायुवं गृ० षे । इन्द्राय त्वा देवायुवं गृ० ष इन्द्रावरुणाभ्यां त्वा देवायुवं गृ०षे । इन्द्राबृहस्पतिभ्यां त्वा देवायुवं गृ० षऽइन्द्राविष्णुभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुषे॥ २ ॥ ॥ १-२ ॥

( १०-१२)

२४–२६ मूर्धानं० ०सस्करत् ॥ १-३ ॥ यस्ते० ०क्रमणमसि॥ १ ॥

( १३-२२ )

३०-४० उपयामगृहीतोऽसि० महेन्द्राय त्वा ॥ १ ॥

[ द्वाविंशत्यनुवाकेषु चत्वारिंशत् ॥ ४० ॥ ] इति सप्तमोऽध्यायः ॥ [ ३८० ]

## अथाष्टमोऽध्यायः ।

( १ )

२-३ कुदा चुन० ॥ १ ॥ ०मातस्था अमृतं० ०त्येभ्यस्त्वा ॥ १-२ ॥

४-५ यज्ञो दे० ०मृळयन्तः० ॥ विवस्वाँरआदि० मत्स्व ॥ ३ ॥

( २-३ )

५ अदस्मै० ०स्याम ॥ १ ॥

( ४ )

७ उपयाम० चनोधाश्चनो मयि० ०भगाय सवित्रे त्वा ॥ १ ॥

( ५ )

८ उपयाम० देवेभ्यः ॥ १ ॥

( ६ )

९ उपयाम० ०बृहस्पतिसुतस्य तं देव सोम ॥ इन्द्र इन्द्रियावतः ० ऋध्यासम् ॥ १ ॥

,, अहं पर० तदु मे पितासं ॥ ०यत् ॥ २ ॥

१० अग्ने वाकपत्नि सजूर्देवेन० ०मशीय ॥ ३-४ ॥

( ७ )

११-१२ उपयाम० ॥१॥ यस्ते देव सोमाश्व० ०क्थस्योपहूत उपहूतस्य भक्षयामि॥१-२॥

( ८ )

३४ युक्ष्वा हि० ०षोळशिनं० ०षोळशिने ॥ १ ॥

( ९ )

३३ आतिष्ठ० षोळशिनं० ०षोळशिने ॥ १ ॥

( १० )

३५ इन्द्रमिद्धरी० षोळशिन० ०षोळशिने ॥ १ ॥

( ११ )

३६-३७ यस्मान्न० ०स षोळशी ॥ १ ॥ इन्द्रश्च० प्राणेन स्वाहा ॥ १-२ ॥

( १२ )

[ १९।३८ ] अग्नऽआयूंषि पवसऽआसुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम् ।

३८ उपयामगृहीतोऽस्यग्नये त्वा वर्चसऽएष ते योनिरग्नये त्वा वर्चसे ॥
अग्ने वर्चस्वन्वर्चस्वाँस्त्वं देवेष्वसि ॥ वर्चस्वानहं मनुष्येषु भूयासम् ॥ १ ॥

( १३ )

३८ अग्ने पवस्व० ॥ अग्ने वर्चस्वन्० ०भूयासम् ॥ १ ॥

( १४ )

३९ उत्तिष्ठ० । इन्द्रौजस्वन्नोजस्वाँस्त्वं देवेष्वसि ॥ ओजस्वानहं मनुष्येषु भूयासम् ॥ १ ॥

( १५ )

४० अदृश्रमस्य० ०त्वा भ्राज एष० सूर्याय त्वा भ्राजे ॥ सूर्य भ्राजस्वन्भ्राजस्वाँ३स्त्वं
देवेष्वसि ॥ भ्राजस्वानहं मनुष्येषु भूयासम् ॥ १ ॥

( १६ )

४१ उदु त्यं ०त्वा भ्राज एष ते योनिः सूर्याय त्वा भ्राजे ॥
सूर्य भ्राजस्वन्भ्राजस्वाँ३स्त्वं देवेष्वसि । भ्राजस्वानहं मनुष्येषु भूयासम् ॥ १ ॥

( १७ )

[ अ० ७।४२;१३।४६ ] चित्रं देवानामुदगादनीकं० सूर्य आत्मा जगतस्तस्थुषश्च ॥

४० उपयाम० ०भूयासम् ॥ १ ॥

( १८-१९ )

४४-४५ वि नं० विमृधे ॥ १ ॥ वाचस्पतिं० ०विश्वकर्मणे ॥ १ ॥

( २० )

[ अ० १७।२२ ] विश्वकर्मन्हविषा० सपत्ना इहास्माकं मघवा सूरिरस्तु ।

४५ उपयाम० ०विश्वकर्मणे ॥ १ ॥

( २१ )

४६ विश्वकर्म० ०णोरयुध्यम् ॥ ०विश्वकर्मणे ॥ १ ॥

